# ॥ * अथ प्रपञ्चसारविवेकप्रारंभः * ॥



# ॥ अथ प्रपंचसारविवेकस्थविषयाणामनुक्रमः



प्र०सा० ॥४॥



## चतुर्थोल्लासः



अनु० ॥४॥

## पष्ठोल्लासः

## अष्टमोल्लासः

## नवमोल्लासः

॥ इत्यनुक्रमणिका समाप्ता ॥

पुस्तक मिलनेका ठिकाणा

गंगाविष्णु श्रीकृष्णदास-

"श्रीवेंकटेश्वर" छापखाना ( मुंबई. )

विक्रयार्थ पुस्तक

# भक्तिमाला अथवा हरिभक्तिप्रकाशिका

यह ग्रंथ वार्तिक सबलोगोंकी समझमें आसकै ऐसी हिंदुस्थानीभाषामें हमारे यहां छापकेतयार हैइस्में२४निष्ठा और अनेंकभक्तौंकीकथा विस्तारपूर्वक वर्णनकरी है भगवतनामकोमहिमा गुरुमहिमा भक्तीकोमहिमा भक्तीकास्वरुप भगवतभक्तौंकीमहिमा भक्तिमालवनानेकाकारण भक्तिमालकीमहिमा रसभेद भगवद्भजनविमुखपुरुपोंका आख्यान मुक्तोके स्वरूपका आख्यान निर्गुणसगुणकावर्णन मुख्यचारसंप्रदायोंके अंतर और परिणाम उनकेएकहोनेकावृत्तांत स्मार्तोंके मार्गका वृत्तांत भगवतके अवतार लेना और इच्छानुसार चरित्र करनेका कारण कुसं-

गसे हानि और संतसंगसेलाभवकावर्णन बहोतसी निष्ठा होनेकाकारण निम्बार्क माध्व श्रीरामानुजीय विष्णुस्वामी आदिसबसंप्रदायोंका विस्तार पुर्वक वर्णन मूल वृक्ष तिलकमुद्रा आदिवर्णन कियागयाहै इसलिये हरिभक्तजनोंको अवश्यरखने लायकहै इसलिये जिन महाशयोंको आपेक्षितहो हमें जलदीलिखै क्योंकि बहोत पुस्तकें विक गई है और बराबर विकतीचली जाती है मू०४रु०डाकम०१० आणा

## भाषा न्यायप्रकाश श्रीमत् चिद्घनानंद स्वामि कृत

पूर्व में जो आत्मपुराणभाषा श्रीमद्भगवद्गीता गूढार्थदीपिका सह टीका विचारसागर वृत्तिप्रभाकर आदि ग्रंथ महात्मा लोगोंने कियेहै तिन ग्रंथोंके बहोत स्थलोंमें भेदवादीनैयायकों का मत लिखाहै कहीं खंडन करने के लिये कहींदृष्टांत रू-

प्रकारके परंतु तिनवेदांत ग्रंथो विषे नैयायकों के पदार्थ विस्तार पूर्वक लिखे नहीं और वहोत स्थलोमें तिन पदार्थों के नाममात्रही लिखे हैं इसलिये पठन करने वालों के समझमें आवे नहीं इसकरण वहोत लोगोंकी प्रार्थनासे श्रीस्वामीजीने यह ग्रंथ रचकर तयार किया और इस ग्रंथमें कणादि मुनिप्रणीत वैशेषिक शास्त्र के द्रव्यादिक सप्त पदार्थों का तथा गौतममुनि प्रणीत न्यायशास्त्र के प्रमाणादिक षोडश पदार्थों का विस्तार पूर्वक निरूपण किया है और प्रसंग पायके मीमांसा शास्त्रके मतका तथावेदांशास्त्रकेमतका तथा बौद्धों के मतका तथाआचार्योंके मतका तथा अन्यभीवहोत मतोंका निरूपण कियाहै तथा तिन मतों का यथा योग्य खण्डन भी किया है और इस ग्रंथमें द्रव्यादिक पदार्थों का लक्षण तथा अनुमान

॥ श्रीगणेशायनमः ॥ ॥ श्रीमल्लक्ष्मीवेंकटेशाय नमः ॥ ॥ ॐ ॥ नमस्कृत्यशिवंनाथंल
क्ष्मीकांतंजगद्गुरुम् ॥ भवानींढुंढिराजंचदंडपाणिंचभैरवम् ॥ १ ॥ गंगांसरस्वतींरामंवायुपुत्रं
जितेंद्रियम् ॥ देवदैत्यगुरुंसूर्यंवाल्मीकंव्यासनारदौ ॥ २ ॥ अद्वैतंनंदपादाब्जंपितरंमातरंगुरु
म् ॥ देवान्ऋषीन्पितॄन्धर्मंकाशींचहृदिभक्तितः ॥३ ॥ सदाशिवतनूजन्मावत्सगोत्रःसतांप्रियः ॥
गंगाधरइतिख्यातोभगवद्भक्तकिंकरः ॥ ४ ॥ नानाशास्त्राणिचालोक्यबालानांहितकाम्यया ॥
भवसारविवेकंचकुर्वेमोहविनाशकम् ॥ ५ ॥ यस्यप्रज्ञानमात्रेणमातेवहितकारिणी ॥ बुद्धिर्वि
कसतेपुंसांसोयमाद्रियतांबुधैः ॥ ६ ॥ सुभाषितंविचित्रंचयोनोजानातिमानवः ॥ बलीवर्दस
मोलोकेशोभतेशृंगवर्जितः ॥ ७ ॥ रूपयौवनसंपन्नाविशालकुलसूनवः ॥ विद्याहीनानशोभं
तेनिर्गंधाःकिंशुकाइव ॥ ८ ॥ विद्यांप्राप्यप्रयत्नेनधर्मंमोक्षंनविंदति ॥ अर्थकामपरोनित्यंसवै
मूढइतिश्रुतः ॥ ९ ॥ यस्यविद्यापवर्गायपरोपकृतिजीवितम् ॥ ससाधुर्धीरइत्याहुःपंडितःकव

योमहान् ॥ १० ॥ शीलविद्याविहीनेननकिंकुलेनचदेहिनाम् ॥ अकुलीनोपिविद्वांश्चेत्पूज्यतेदेव
तैःसमम् ॥ ११ ॥ विद्यायशस्करीपुंसांश्रेयःसंतोपदायिनी ॥ सम्यगाराधिताविद्यामोक्षदाइ
तिमेमतिः ॥ १२ ॥ शूरश्चकृतविद्यश्चयश्चजानातिसेवितुम् ॥ रूपयौवनसंपन्नायानारीधनि
कःकविः ॥ १३ ॥ दातादोग्ध्रीसुधेनुश्चमंजुभापीजितेंद्रियः ॥ एतेयत्रचतिष्ठंतितत्रलोकेकृता
दराः ॥ १४ ॥ किंतपःकिंसुखंदानंकोधर्मःकस्यसंपदः ॥ कःशूरःकश्चविद्वांश्चकोलाभःसंसृतौम
हान् ॥ १५ ॥ कोदेवःकश्चपूज्यश्चधीरःकोवंधुरेवच ॥ शत्रुःकःकिंचमित्रंचकिंफलंजीवितस्यतु
॥ १६ ॥ भूपणंकिंपवित्रंचग्राह्यंकिंत्याज्यमेवच ॥ तीर्थंकिंकश्चसुज्ञश्चमूर्खःकोब्रूततत्त्वतः ॥
॥ १७ ॥ ॥ इतिश्रीमन्महाडकरोपनामकभगवद्भक्तकिंकरगंगाधरविरचितेप्रपंचसारविवेके
उपोद्घाताख्यःप्रथमोल्लासः ॥ १ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ १ ॥
॥ क्षांतितुल्यंतपोनास्तिसंतोपान्नपरंसुखम् ॥ नमैत्रीसदृशंदानंनास्तिधर्मोदयापरः ॥ १ ॥ बा

ह्येचाभ्यंतरेवापिदुःखउत्पादितेपरैः ॥ नकुंथतिनवाहंतिसाक्षमापरिकीर्तिता ॥ २ ॥ अनाया
सेनसंप्राप्तेयोग्येवस्तुनिसर्वदा ॥ अलंबुद्धिर्विवेकेनसंतोषःकथ्यतेबुधैः ॥ ३ ॥ परदुःखेनयोदुः
खीपरतुष्ट्यातुतुष्टिमान् ॥ निर्वैरःसर्वभूतेषुसामैत्रीपरिकीर्त्तिता ॥ ४ ॥ प्रियवाक्यप्रदानेनसर्वे
तुष्यंतिजंतवः ॥ तस्मात्प्रियंसदाब्रूयाद्वचनेकिंदरिद्रता ॥ ५ ॥ परेवाबंधुवर्गेवामित्रेद्वेष्टरि
वासदा ॥ आपन्नेरक्षितव्यंतुदयैषापरिकीर्तिता॥६॥ प्राणायथात्मनोभीष्टाभूतानामपितेतथा
॥ आत्मौपम्येनसर्वत्रदयांकुर्वंतिसाधवः ॥ ७॥ यस्यचित्तंद्रवीभूतंकृपयासर्वजंतुषु ॥ सध
न्यःसंसृतौपुण्यःकिंजटाभस्मवल्कलैः ॥ ८ ॥ काकाःकृष्णाःशुकानीलाहंसाश्चधवलीकृताः ॥
मयूराश्चित्रितायेनवह्नेरूर्ध्वगतिःकृता ॥ ९॥ वायोस्तिर्यग्गतिर्यस्तुवृष्टेःकर्ताचपोषकः॥ कीटा
नांचपशूनांचसमेचिंतांकरिष्यति ॥ १० ॥ एवंनिश्चित्यसततंस्वधर्मेयोनुवर्त्तते ॥ सनरःपंडितो
लक्ष्म्याभाजनंसाधुरुच्यते ॥ ११ ॥ पठकाःपाठकाधूर्तास्तर्कवादपरायणाः ॥ सर्वेव्यसनिनो

मूर्खोयः क्रियावान्सपंडितः ॥ १२ ॥ इंद्रियाणितुसंयम्यवकवत्पंडितोजनः ॥ देशंकालंबलं
ज्ञात्वासर्वकार्याणिसाधयेत् ॥ १३ ॥ कःकालःकानिमित्राणिकोदेशःकौव्ययागमौ ॥ कश्चाहंकाच
मेशक्तिरितिचिंत्यंमुहुर्मुहुः ॥ १४ ॥ एवंचिंतयमानस्यस्वधर्मनिरतस्यच ॥ भवंतिसंपदःसर्वा
गुणलुब्धाःस्वयंहिताः ॥ १५ ॥ यथायथाहिपुरुषःकल्याणेकुरुतेमतिम् ॥ तथातथास्यसर्व
श्रीर्वर्धतेनात्रसंशयः ॥ १६ ॥ जितेंद्रियः कोपहंतायश्चापत्सुनमुह्यति ॥ सशूरोधन्यइत्याहुः
प्राणिहंतातुपापकृत् ॥ १७ ॥ कामक्रोधादिशत्रूंश्चश्रेयोमार्गविघातकान् ॥ अज्ञात्वाप्राणिनो
दीनान्घातयंत्यरिबुद्धितः ॥ १८ ॥ प्राणिघातकवीराश्चबहवःसंतिभूतले ॥ कंदर्पघातकोवीरःक्व
चित्तिष्ठतिवानवा ॥ १९ ॥ पंचभूतात्मकेदुर्गेनवद्वारसमन्विते ॥ प्राणेंद्रियेष्टकाबद्धेविचित्रेजी
वनायके ॥ २० ॥ तत्रबुद्धिःकामधेनुःसंतोषोवत्सउत्तमः ॥ कामव्याघ्रेणबलिनागृहीतौस
हसाचतौ ॥ २१ ॥ तंव्याघ्रंधेनुहंतारंविवेकेनासिनापुमान् ॥ हंतुंनेच्छतियोमोहान्नरकंप्रतिपद्य

ते ॥ २२ ॥ यःकश्चित्क्रूरराजश्वविवेकेनासिनाबलात् ॥ कामव्याघ्रंनिहन्याच्चेत्सवैमोक्षपयःपि
वेत् ॥ २३ ॥ जन्ममृत्युजराव्याधिग्रस्तानांप्राणिनांवधे ॥ किंफलंशूरमूढस्यकोपंतेजहिवैरि
णं ॥ २४ ॥ योंतःशीतलयाबुद्ध्यारागद्वेषविमुक्तया ॥ साक्षिवत्पश्यतीदंहिसविद्वान्परमःस्मृ
तः ॥ २५ ॥ नजायतेम्रियतेवाक्वचित्किंचित्कदाचन॥जगद्विवर्त्तरूपेणकेवलंब्रह्मजृंभते ॥२६ ॥
हृदयाकाशमात्रस्यविनाशोदेहनाशतः ॥ व्यर्थंभूतानिशोचंतिनष्टआत्मेतिशंकया ॥ २७ ॥
घटादिषुप्रनष्टेषुयथाकाशमखंडितम् ॥ तथादेहेषुनष्टेषुदेहीनित्यमलेपकः ॥ २८ ॥ एवंयेनप
रिज्ञातंहेयोपादेयमुज्झता॥ सविद्वान्विदुषांश्रेष्ठःपूर्वोक्तात्पुरुषोत्तमः ॥ २९ ॥ शून्यमापूर्णतामे
तिमृत्युरप्यमृतायते ॥ आपत्संपदिवाभातिविद्वज्जनसमागमात् ॥ ३० ॥ सदासंतोभिगंत
व्यायद्यप्युपदिशंतिन ॥ याहिस्वैरकथास्तेषामुपदेशाभवंतिताः ॥ ३१ ॥ यावन्नानुग्रहःसाक्षा
ज्जायतेपरमेश्वरात् ॥ तावन्नसद्गुरुंकश्चित्सच्छास्त्रंवापिचनोलभेत् ॥३२॥ विद्वद्भिःसहवासश्चसं

सारेलाभउत्तमः ॥ ज्ञानंसंप्राप्यतेयस्माद्भवबंधविमोचनम् ॥ ३३ ॥ केचिद्बुधाइतिप्राहुर्नला
भोजीवितात्परं ॥ धनादिलाभंमन्यंतेप्राकृताअपिचोत्तमम् ॥ ३४ ॥ देवंनारायणंज्ञेयंव
क्ष्यमाणंशिवंविभुम् ॥ सएवपूज्योभक्तावातस्यविद्वांसउत्तमाः ॥ ३५ ॥ ब्राह्मणेषुचविद्वांसंपू
ज्यंशूरंचपार्थिवे ॥ वैश्येषुधनिकंपूज्यंशूद्रेवृद्धंचधार्मिकम् ॥ ३६ ॥ योनिरुंध्यात्परंवेगंकामक्रो
धसमुद्भवम् ॥ विषयेभ्यश्चेंद्रियाणिसधीरःकथ्यतेबुधैः ॥ ३७ ॥ धर्मएवमहान्बंधुःपापंशत्रुःसु
दारुणः ॥ सद्विवेकःसुमित्रंचभार्यावासुंदरीसती ॥ ३८ ॥ जीवितस्यफलंप्रोक्तंसर्वदाहरिकीर्त्त
नम् ॥ प्राणिनामुपकारंचप्रेम्णावाक्कायमानसैः ॥ ३९ ॥ स्वधर्मपालनाज्जातंयशः शुद्धंमह
द्यत् ॥ तदेवभूषणंपुंसांपूतायोगिनउत्तमाः ॥ ४० ॥ संतोषःसततंग्राह्यःकृत्वाबुधमनुत्तम
म् ॥ विवेकंज्ञानदंत्याज्याकुतृष्णादुःखदाऽसती ॥ ४१ ॥ च्युतादंताःसिताःकेशावाङ्निरोधःप
देपदे ॥ पातसज्जमिमंदेहंज्ञात्वातृष्णांनमुंचति ॥ ४२॥ परंवैप्रत्यगात्मानंसुखंबुध्वामुनीश्वराः॥

रमंतेसर्वदातत्रहित्वातृष्णांसुदुस्तरां ॥ ४३ ॥ भूतानामभयंदानंतपोमानसनिग्रहः ॥ बुद्धिला
भोमहान्लाभःसत्यवाक्धर्मउच्यते ॥ ४४ ॥ विवेकोबंधुरित्याहुर्मैत्रःसंतोषईरितः ॥ शत्रुः
कामइतिप्रोक्तःसत्यंतीर्थंपरंस्मृतं ॥ ४५ ॥ गोब्राह्मणहितार्थंतुसत्यवच्चानृतंभवेत् ॥ तत्रसत्यं
यदिब्रूयाद्ब्रह्महाकिल्बिषीभवेत् ॥ ४६ ॥ संतोषस्त्रिषुकर्त्तव्यःस्वदारेभोजनेधने ॥ त्रिषुचैवनक
र्त्तव्योदानेचाध्यायनेजपे ॥ ४७ ॥ सत्यस्नायीसदापूतःसत्येसर्वंप्रतिष्ठितं ॥ सत्येनलोकाना
प्नोतिपुण्यात्सत्यंसदावदेत् ॥ ४८ ॥ यदिसत्यव्रतंकुर्यात्किंतीर्थभ्रमणेनकिं ॥ दानयज्ञतपोभि
श्चतस्मात्सत्यव्रतीभवेत् ॥ ४९ ॥ नानृतात्पातकंकिंचिन्नसत्यात्सुकृतंपरं ॥ विवेकान्नपरोबंधु
रितिवेदविदोविदुः ॥५० ॥ भूषणंपरमंशीलंसर्वभूतोपकारकं ॥ विनाशीलंनशोभंतेरत्नानिवि
विधानिच ॥ ५१ ॥ गांगंतोयंपवित्रंचपवित्रंरामकीर्तनं ॥ स्वाग्निवार्वायवश्चापिपवित्राःकवयो
विदुः ॥ ५२ ॥ त्याज्योऽभिमानःसततंग्राह्योविनयएवच ॥ अहंकारोविषंचाहुर्विनयोऽमृतामि

स्यपि ॥ ५३ ॥ त्याज्यादोषागुणाग्राह्याइत्येकेकुशलाविदुः ॥ प्राणिमात्रेषुसर्वेषुगुणदोषावु
भौस्मृतौ ॥ ५४ ॥ तत्रतत्रगुणोग्राह्योदोषंहित्वाहितायवै ॥ गुणदोषौविजानातिसवैसुज्ञइति
स्मृतः ॥ ५५ ॥ विषादप्यमृतंग्राह्यममेध्यादपिकांचनं ॥ नीचादप्युत्तमांविद्यांस्त्रीरत्नंदुष्कुला
दपि ॥ ५६ ॥ कस्यदोषःकुलेनास्तिव्याधिनाकोनपीडितः ॥ व्यसनंकेननप्राप्तंकस्यसौख्यंनि
रंतरं ॥ ५७ ॥ दुर्लभंभारतेवर्षेजन्मप्राप्यनराधमः ॥ नकरोतिहरेःसेवांसमूर्खःकथ्यतेबुधैः ॥
॥ ५८ ॥ यस्तुस्वार्थंपरित्यज्यस्वार्थमोहेनसर्वदा ॥ खलस्यसेवांकुरुतेमूर्खराजःसउच्यते ॥
॥ ५९ ॥ यइदंचपठेन्नित्यंगूढप्रश्नोत्तरंवरं ॥ मूढोपिप्राप्नुयाद्बुद्धिंप्रशस्तांधर्मभाग्भवेत् ॥ ६०॥
इति श्रीमन्महाडकरोपनामकभगवद्भक्तकिंकरगंगाधरविरचितेप्रपंचसारविवेकेगूढप्रश्नोत्तरनि
रूपणंनामद्वितीयोल्लासः ॥ २ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥
अथवक्ष्यामिसर्वेषांमानवानांहितायवै ॥ नीतिशास्त्रंसाधुमतंधर्मार्थसुखदंमृदु ॥ १ ॥ त्यक्त्वा

दुर्जनसंसर्गंभजसाधुसमागमं ॥ कुरुपुण्यमहोरात्रंस्मरनित्यमनित्यतां ॥ २ ॥ सद्भावोनास्ति
मूर्खाणांस्थिरतानास्तिसंपदाम् ॥ विदेशोनास्तिसाधूनांनाशोनास्तिहिकर्मणाम् ॥ ३ ॥ उद्य
मेनविनाराजन्नसिध्यंतिमनोरथाः ॥ नहिसुप्तस्यसिंहस्यनिपतंतिमुखेमृगाः ॥ ४ ॥ वशीकुर्या
त्प्रयत्नेनजगच्चविविधेनच ॥ उग्रंस्तुल्यावादंडेनगुरुंचविनयेनच ॥ ५ ॥ सेवयावास्त्रियंधूर्तं
कौटिल्येनचमायया ॥ सुहृदंप्रेमभावेनमूर्खंवहुकथामृतैः ॥ ६ ॥ देवंभक्त्याऽनन्ययातुबालकंल
ड्डुकादिना ॥ दीनंचदययामृत्युमात्मज्ञानेनवापुनः ॥ चित्तंयोगेनविपयेद्दोपदृष्ट्याचसर्वदा ॥
सत्कारेणातिथिंबंधूनार्जवेनचगोऽनलौ ॥ ८ ॥ कंडूयनेनहोमेनविध्युक्तेनमृगद्विजौ ॥ गायने
नविचित्रेणमधुरान्नैःसदक्षिणैः ॥९॥ नात्यंतसरलैर्भाव्यंगत्वापश्यवनस्पतीन् ॥ सरलास्तत्रछि
द्यंतेवक्रास्तिष्ठंतिपादपाः ॥१०॥ यस्ययस्यहियोभावस्तस्यतस्यहितंतुतत् ॥ अनुप्रविश्यमेधा
वीक्षिप्रमात्मवशंनयेत् ॥ ११ ॥ वुद्धिबोध्यानिशास्त्राणिनाबुद्धिःशास्त्रबोधिनी ॥ प्रत्यक्षेचकृ

तेर्दीपेचक्षुर्हीनोनपश्यति ॥ १२ ॥ यस्यनास्तिस्वयंप्रज्ञाशास्त्रंतस्यकरोतिकिं ॥ लोचनाभ्यांवि
हीनस्यदर्पणंकिंकरिष्यति ॥ १३ ॥ नहिकश्चित्कृतेकार्येकर्तारंसमुपेक्षते ॥ तस्मात्सर्वाणिका
र्याणिसावशेषाणिकारयेत् ॥ १४ ॥ स्वजनेकुरुदाक्षिण्यंदयाहीनेशठेस्मयं ॥ विद्वज्जनेष्वार्ज
वंचसाधौप्रीतिंगुरौक्षमां ॥ १५ ॥ शौर्यंक्रूरेतथानार्याधूर्ततांपरमेश्वरे ॥ वेदेमंत्रेचविश्वासंपित्रा
ज्ञापरिपालनम् ॥ १६ ॥ एतेगुणायस्यतस्यज्ञातिप्राधान्यमुत्तमम् ॥ भवेच्चसंपद्विपुलाकी
र्तिरायुःप्रजाबलम् ॥ १७ ॥ यस्मिन्देशेनसन्मानंनवृत्तिंनचसाधवः ॥ नचाविद्यागमःकश्चिद्वा
सस्तत्रनकारयेत् ॥ १८ ॥ त्यजेदेकंकुलस्यार्थेग्रामस्यार्थेकुलंत्यजेत् ॥ ग्रामंजनपदस्यार्थेआ
त्मार्थेपृथिवींत्यजेत् ॥ १९ ॥ ज्ञातव्याःप्रेषणेभृत्याबांधवाव्यसनागमे ॥ मित्रंचापदिकाले
चभार्याचविभवक्षये ॥ २० ॥ तेपुत्रायेपितुर्भक्ताःसपितायस्तुपोषकः ॥ तन्मित्रंयत्रविश्वासः
साभार्यायत्रनिर्वृत्तिः ॥ २१ ॥ परोक्षेकार्यहंतारंप्रत्यक्षेप्रियवादिनम् ॥ वर्जयेत्तादृशंमित्रंविष

कुंभंपयोमुखम् ॥ २२ ॥ सुलभाःपुरुषाराजान्द्रव्यार्थप्रियवादिनः ॥ अप्रियस्यचपथ्यस्यव
क्ताश्रोताचदुर्लभः ॥ २३ ॥ धर्मार्थकाममोक्षाणांयस्यैकोपिनविद्यते ॥ अजागलस्तनस्येवत
स्यजन्मनिरर्थकम् ॥ २४ ॥ दुर्जनस्तुपरित्याज्यःसर्वानर्थस्यकारणम् ॥ वाक्यहालाहलेनैव
लोकानांध्वंसकोधमः ॥ २५ ॥ खलानांकंटकानांचद्विविधैवप्रतिक्रिया ॥ उपानन्मुखभंगोवादू
रतोवाविसर्जनम् ॥ २६ ॥ विद्यांकुलंचधर्मंचलज्जांहित्वाभ्रमंतिये ॥ धनाद्यर्थंतुतेमूढाःपतंति
नरकेध्रुवम् ॥ २७॥ अन्यायव्ययकर्त्ताचअनाथकलहप्रियः ॥ सर्वभक्षीकुचैलीचहास्यमिश्रित
भाषणः ॥ २८ ॥ उदयास्तमयेशायीसदादंतमलान्वितः॥ एकांतगःपापरतिर्गृहगुह्यप्रकाशकः
॥ २९ ॥ खादन्व्रजन्श्वभिःक्रीडन्वन्हिंपादेनसंस्पृशन् ॥ चरणौधूपयन्पुष्पंमस्तकेस्थापयन्मु
दा ॥ ३० ॥ निंदन्स्वधर्मान्प्रीतिंचपरधर्मेषुधारयन् ॥ पित्रादीनवमन्यन्वैभार्यांसंभावयन्पु
नः ॥ ३१ ॥ सहसोच्चैर्विजल्पन्सन्नात्मानंसर्वदास्तुवन् ॥ अजीर्णेभोजनंकुर्वन्नन्यायेनधनार्ज

नं ॥ ३२ विश्वासंदुर्जनानांचवृथावेहादिवेष्टनम् ॥ अस्थानेहर्षकोपौचगुर्वग्रेप्रौढभाषणम् ॥
॥ ३३ ॥ शौचादिकंशुचिस्थानेयोवैलोकेविराजते ॥ सनरोगर्दभःप्रोक्तोमूढःपापीसुदुःखभाक् ॥
॥ ३४ ॥ अनृतंसाहसंमायामूर्खत्वमतिलोभता ॥ अशौचंनिर्दयत्वंचस्त्रीणांदोषाःस्वभावजाः
॥ ३५ ॥ मातापिताचशत्रुःस्याद्याभ्यांबालोनपाठितः ॥ नशोभतेसभायांहिहंसमध्येबकोयथा
॥ ३६ ॥ लालयेत्पंचवर्षाणिदशवर्षाणिताडयेत् ॥ प्राप्तेतुषोडशेवर्षेपुत्रंमित्रवदाचरेत् ॥ ३७ ॥
लालनाद्बहवोदोषास्ताडनाद्बहवोगुणाः ॥ तस्मात्पुत्रंचशिष्यंचताडयेन्नतुलालयेत् ॥३८॥ परा
न्नंपरवस्त्रंचपरशय्यांपरस्त्रियाम् ॥ परवेश्मनिवासंचदूरतःपरिवर्जयेत् ॥३९ ॥ उत्तमस्यापिवर्णे
स्यनीचोपिगृहमागतः॥तस्यमान्यःसहिज्ञेयःसर्वस्याभ्यागतोगुरुः ॥४०॥ जनिताचोपनीताच
यःसुविद्यांप्रयच्छति॥अन्नदाताभयत्रातापंचैतेपितरःस्मृताः ॥ ४१॥ राजपत्नीगुरुपत्नीमित्रप
त्नीतथासती ॥ पत्नीमाताचपूज्याहिसर्वास्तामातरःस्मृताः ॥ ४२ ॥ वेदवेदांगतत्वज्ञोजपहो

मपरायणः ॥ आशीर्वादपरोनित्यमेपयोग्यःपुरोहितः ॥ ४३ ॥ मेधावीमृदुभापीचपरवित्तोप
लक्षकः ॥ धीरोयथोक्तशदीचयःसदूतोविधीयते ॥ ४४ ॥ त्यजेत्स्वामिनमत्युग्रमत्युग्रात्कृप
णंत्यजेत् ॥ कृपणादिविशेपज्ञंतस्माच्चकृतनाशनम् ॥४५॥ विप्राग्न्योर्विप्रयोर्वापिदंपत्योःस्वा
मिभृत्ययोः ॥ अंतरालेनगंतव्यंहरस्यवृपभस्यच ॥ ४६ ॥ नात्युच्चंमेरुशिखरंनातिनीचंरसात
लम् ॥ व्यवसायसहायस्यनातिदूरंमहोदधिः ॥ ४७ ॥ सत्कुलेयोजयेत्कन्यांपुत्रंविद्यासुयोज
येत् ॥ व्यसनेयोजयेच्छत्रुमिष्टंधर्मेनियोजयेत् ॥ ४८ ॥ वस्त्रहीनमलंकारंघृतहीनंचभोजनम् ॥
स्वरहीनंगायनंचभावहीनंचमैथुनम् ॥ ४९ ॥ विरक्तस्यतृणंभार्याशूरस्यमरणंतृणम् ॥ तृणंब्र
ह्मविदःस्वर्गोनिस्पृहस्यतृणंजगत् ॥ ५० ॥ लक्ष्मीर्लक्षणहीनेचकुलहीनेसरस्वती ॥ कुपात्रेर
मतेनारीगिरौवर्पतिमाधवः ॥ ५१ ॥ यस्यार्थस्तस्यमित्राणियस्यार्थस्तस्यबांधवाः ॥ यस्यार्थः
सपुमान्लोकेयस्यार्थःसचपंडितः ॥ ५२ ॥ अनभ्यासेविपंशास्त्रमजीर्णेभोजनंविषम् ॥ विपं

वाक्यंदरिद्रस्यवृद्धस्यतरुणीविषम् ॥ ५३ ॥ आज्ञाभंगोनरेंद्राणांविप्राणांमानखंडनम् ॥ पृथ
क्शय्याचनारीणामशस्त्रवधमुच्यते ॥ ५४ ॥ पुस्तकेषुचयाविद्यापरहस्तेषुयद्धनम् ॥ उत्पन्नेषु
चकार्येषुनसाविद्यानतद्धनम् ॥ ५५ ॥ संसारतापदग्धानांत्रयोविश्रांतिहेतवः ॥ अपत्यंचकल
त्रंचसतांसंगतिरेवच ॥५६॥ दुर्जनःपरिहर्तव्योविद्ययालंकृतोपिच ॥ मणिनाभूषितःसर्पःकिम
सौनभयंकरः ॥ ५७ ॥ वृश्चिकस्यविषंपुच्छेभुजंगस्यापितन्मुखे ॥ अहोखलभुजंगस्यआपादत
लमस्तकम् ॥ ५८ ॥ मुखंपद्मदलाकारंवाचाचंदनशीतला ॥ हृदयंकर्त्तरीयुक्तंत्रिविधंधूर्तलक्ष
णम् ॥ ५९ ॥ अग्निदग्धंजलेमग्नंहृतंतस्करपार्थिवैः ॥ तत्सर्वंपरलोकाययदिक्षैव्यंनभाषते ॥
॥ ६० ॥ गजंमत्तंद्विजंनष्टंवृषभंकाममोहितम् ॥ अंतःपुरगतंराजंदूरतःपरिवर्जयेत् ॥ ६१ ॥
बालार्कप्रेतधूमंचवृद्धास्त्रीपल्वलोदकम् ॥ आयुःक्षयकरंनित्यंरात्रौचदधिभोजनम् ॥ ६२ ॥ वृ
द्धार्कहोमधूमंचबालास्त्रीनिर्झरोदकम् ॥ आयुष्यंवर्धतेतस्यरात्रौचक्षीरभोजनम् ॥ ६३ ॥ अ

जारजः खररजस्तथासंमर्जनीरजः ॥ दीपमंचकयोश्छायाहंतिपुण्यंपुराकृतम् ॥ ६४ ॥ शतेन
सहयानेनगछंतमनुगछति ॥ प्राक्तनंबंधनंकर्मकोन्यथाकर्त्तुमिछति ॥६५॥ अवश्यंभाविनोभा
वाभवंतिमहतामपि ॥ नग्नत्वंनीलकंठस्यमहाहिशयनंहरेः ॥ ६६ ॥ अवश्यंभाविभावानांप्रति
कारोभवेद्यदि ॥ तदादुःखैर्नलिप्येयुर्नलरामयुधिष्ठिराः ॥ ६७॥ यौवनंधनसंपत्तिःप्रभुत्वमविवे
कता ॥ एकैकमप्यनर्थायकिमुयत्रचतुष्टयम् ॥ ६८ ॥ एकोदरसमुत्पन्नाएकनक्षत्रसंभवाः ॥ न
भवंतिसमंशीलायथावदरिकंटकाः ॥ ६९ ॥ एकोपिगुणवान्पुत्रोमानिर्गुणशतंभवेत् ॥ एकश्चं
द्रस्तमोहंतिनचताराःसहस्रशः ॥ ७० ॥ यस्यपुत्रोनविद्यावान्नशूरोनचपंडितः॥ अंधकारंकुलं
तस्यनष्टचंद्रेवशर्वरी ॥ ७१ ॥ सेवितव्योमहावृक्षोफलछायासमन्वितः ॥ यदिदैवात्फलंनास्ति
छायाकेननिवारिता ॥ ७२ ॥ यद्ददासिविशिष्टेभ्योयच्चाश्नासिदिनेदिने ॥ तत्तेवित्तमहंमन्ये
शेषमन्यस्यरक्षसि ॥ ७३ ॥ आयासशतलब्धस्यप्राणेभ्योपिगरीयसः ॥ गतिरेकैववित्तस्यदा

नमन्याविपत्तयः ॥ ७४ ॥ जीवंतोपिमृताःसप्तकृपणोनिंदितःसदा ॥ दरिद्रोव्याधितोमू
खंःप्रवासीनीचसेवकः ॥ ७५ ॥ येषांनविद्यानतपोनदानंनचापिशीलंनधनंनधर्मः ॥ तेमृत्युलो
केभुविभारभूतामनुष्यरूपेणमृगाश्चरंति ॥ ७६ ॥ त्यजंतिमित्राणिधनैर्विहीनंपुत्राश्चदाराश्च
सहोदराश्च ॥ तमर्थवंतंपुरुषंश्रयंतिवंधुर्हिलोकेपुरुषस्यचार्थः ॥७७॥ वरंनराज्यंनकुराजराज्यंवरं
नरामानकुरामरामा ॥ वरंनपुत्रोनकुपुत्रपुत्रोवरंनशिष्योनकुशिष्यशिष्यः ॥७८॥ कुराजराज्ये
नकुतःप्रजासुखंकुरामरामापतिनिर्वृत्तिःकथम् ॥ कुपुत्रपुत्रीवहुशोकमानसःकुशिष्यमध्यापय
तःकुतोयशः ॥ ७९ ॥ विद्यातपःशीलगुणान्वितायेसुदुर्लभंभारतवर्षजन्म ॥ संप्राप्यधर्मंनभ
जंतिवृद्धंधनेननतेमूढतराहिनूनम् ॥ ८०॥ पुंस्त्वंदेहंवहुपुण्यलभ्यंलब्ध्वापिहित्वासुखदंचरामम्
॥ वहंतिमूढाजलपूर्णकुंभान्दारूणिपाषाणवरान्मुखासये ॥ ८१ ॥ कृत्वाविशालंतिलकंललला
टेकंठेचमालांकरदर्भवृंदान् ॥ निंदंतिसाधून्धनिकान्भजंतितेमूढसिद्धानरकंप्रयांति ॥ ८२ ॥

विद्याविहीनंपशुतुल्यभावंकठोरचित्तंकृपणंतथापि ॥ स्तुवंतिमूढाधनकाम्ययाहानदेवदेवंधन
दंदयालुम् ॥ ८३ ॥ यस्यास्तिवित्तंसनरःकुलीनःसपंडितःसश्रुतवान्गुणज्ञः ॥ सएववक्तासचद
र्शनीयः सर्वेगुणाःकांचनमाश्रयंति ॥ ८४ ॥ वहंतिभारंबहुपुस्तकानांहित्वाशिखासूत्रदयादिकं
च ॥ भवंतिधूर्तान्प्रतितत्त्ववार्त्तासन्यासिनोभांतिकलौविमूढाः ॥ ८५ ॥ भोगानभुक्तावयमेव
भुक्तास्तपोनतप्तंवयमेवतप्ताः॥ कालोनयातोवयमेवयातास्तृष्णानजीर्णावयमेवजीर्णाः॥८६॥
अर्थागमोनित्यमरोगिताचप्रियाचभार्याप्रियवादिनीच॥ वश्यश्वपुत्रोर्थकरीचविद्यापड्जीवलो
कस्यसुखानितात ॥ ८७ ॥ एकंहिचक्षुरमलंसहजोविवेकोविद्वद्भिरेवसहसंवसतिर्द्वितीयं ॥ ए
तद्द्वयंभुविनयस्यसतत्वतोंधस्तस्यापमार्गचलनेवदकोपराधः ॥ ८८ ॥ आक्रोपितोपिसुजनोन
वदत्यवाच्यंनिष्पीडितोपिमधुरंस्रवतीक्षुदंडः॥ नीचोजनोगुणशतैरपिसेव्यमानोहास्येनयद्वद
तितत्कलहेप्यवाच्यम् ॥ ८९ ॥ नैवाकृतिः फलतिनैवकुलंनशीलंविद्यानचापिनचयत्नकृता

भाग्यानिपूर्वतपसापरिसंचितानिकालेफलंतिपुरुपस्ययथैववृक्षाः ॥९०॥ आपत्का
पिसेवा ॥ भाग्यानिपूर्वतपसापरिसंचितानिकालेफलंतिपुरुपस्ययथैववृक्षाः ॥ ९१ ॥ कृत्वारक्षे
लेवैश्यवृत्तिंक्षात्रवृत्तिमथापिवा ॥ अयाज्ययाजनंवापिनिंदिताँच्चप्रतिग्रहम् ॥ ९२ ॥ सेवया
त्स्वमात्मानंनश्ववृत्त्याकदाचन ॥ सेवयाजायतेशूद्रः पुंण्यंनश्यतितत्क्षणात् ॥ ९३ ॥ प्रणम
धनमिच्छद्भि·सेवकैःपश्यकिंकृतम् ॥ यत्स्वातंत्र्यंशरीरस्यमूढैस्तदपिहारितम् ॥ ९४ ॥
त्युन्नतिहेतोर्जीवनहेतोर्विमुंचातिप्राणान् ॥ दुःखीयतिसुखहेतोःकोमूर्खःसेवकादन्यः ॥ ९५ ॥
मौना॰मूकोभाषणाच्चधूर्तोवाजल्पकस्तथा ॥ पार्श्ववर्तीचधृष्टःस्यादप्रगल्भश्चदूरतः ॥ ९६ ॥ क्षि
क्षात्याभीरुःकोपयुक्तोमूर्खःसेवकउच्यते ॥ रूपवांश्चभवेज्जारःसेवाधर्मोतिदुर्गमः ॥ ९७ ॥ त्रहवः
वसेनैवतत्कुर्याद्येनरात्रौसुखंस्वपेत् ॥ अष्टमासेनतत्कुर्याद्येनवर्षाःसुखंव्रजेत् ॥ ९८ ॥ यद्यपि
स्मृतिकर्त्तारोवेदाश्चापिमतानिच ॥ तथापिपंथाविज्ञेयोयोनशिष्टैर्विगर्हितः ॥ ९९ ॥ सम
स्यात्स्वयंब्रह्मात्रैलोक्याकर्षणक्षमः ॥ तथापिलौकिकाचारंमनसापिनलंघयेत् ॥ ९९ ॥ सम

याचारिकोधर्मोजातिदेशकुलोद्भवः ॥ ग्रामाचारःपरिग्राह्यस्तत्रतत्रयथोदितः ॥ १०० ॥ गंगा
स्नानंवेदपाठोविप्रपूजात्मचिंतनम् ॥ स्मरणंवासुदेवस्यप्रशस्तंधर्मलक्षणम् ॥ १ ॥ सभावान
प्रवेष्टव्यावक्तव्यंवासमंजसम् ॥ अब्रुवन्विब्रुवन्वापिनरोभवतिकिल्बिषी ॥ २ ॥ सासभायत्र
वृद्धःस्यात्सत्यवाक्वृद्ध उच्यते ॥ सत्यमुक्तंयथादृष्टंसर्वभूतहितंतुयत् ॥ ३ ॥ विद्वत्त्वंचनृपत्वं
चनैवतुल्यंकदाचन ॥ नृपत्वंक्षीयतेसद्योविद्वत्त्वंनकदाचन ॥ ४ ॥ गुणैरुत्तुंगतांयातिनोच्चैरास
नसंस्थितः ॥ प्रासादशिखरस्थोपिकाकःकिंगरुडायते ॥ ५ ॥ विद्वानेवहिजानातिविद्वज्जनप
रिश्रमम् ॥ नहिवंध्याविजानातिगुर्वीप्रसववेदनाम् ॥ ६ ॥ तृणादपिलघुस्तूलस्तूलादपिचयाच
कः ॥ वायुनाकिंननीतोसौमामयंयाचयिष्यति ॥ ७ ॥ काकानाहूयतेकाकोयाचकोनतुयाच
कान् ॥ काकयाचकयोर्मध्येवरःकाकोनयाचकः ॥ ८ ॥ कर्मायत्तंफलंपुंसांबुद्धिःकर्मानुसारि
णी ॥ तथापिसुधियाभाव्यंसुविचार्यैवकुर्वता॥९॥आलस्योहिमनुष्याणांशरीरस्थोमहान्रिपुः॥

नास्त्युद्यमसमोवंधुःकृत्वायंनावसीदति ॥ ११० ॥ पंचमेहनिषष्ठेवाशाकंपचतिस्वेगृहे ॥ अ
नृणीचाप्रवासीचसवारिचरमोदते ॥ ११ ॥ गायत्रीजपमात्रेणपूज्योविप्रःसुयंत्रितः ॥ आचा
रहीनोनतथावेदशास्त्रविशारदः ॥ १२ ॥ अनुष्ठितंतुयद्देवैर्ऋषिभिर्यदनुष्ठितम् ॥ नानुष्ठेयं
मनुष्यैस्तत्तदुक्तंकर्मआचरेत् ॥ १३ ॥ यावत्स्वस्थंशरीरंचयावदिंद्रियपाटवम् ॥ यावन्नक्षीयते
चायुस्तावद्धर्मंसमाश्रयेत् ॥ १४ ॥ अधोधःपश्यतःकस्यमहिमानोपजायते ॥ उपर्युपरिपश्यं
तःसर्वएवदरिद्रिणः ॥ १५ ॥ जीर्णमन्नंप्रशंसंतिभार्यांचगतयौवनाम् ॥ शूरंविजितसंग्रामंपारं
गततपस्विनम् ॥ १६ ॥ केचिद्दैवात्स्वभावाच्चकालात्पुरुषकारतः ॥ संयोगेफलमिच्छंतिकेचि
त्कुशलवुद्धयः ॥१७॥ हिरण्यभूमिलाभेभ्योमित्रलब्धिर्वरायतः ॥ अतोयतेतत्प्राप्तौरक्षेत्सत्यं
समाहितः ॥ १८॥ नमित्रेवंचनंकुर्यात्कुमतिर्वाकदाचन ॥ नराणांसर्वदुःखानिहीयंतेमित्रदर्श
नात् ॥१९॥योदंड्यान्दंडयेद्राजासम्यग्वध्यांश्चघातयेत् ॥ इष्टंस्यात्क्रतुभिस्तेनसमाप्तवरदक्षिणैः

॥ १२०॥ धिग्दंडोधनदंडोवावधोनिर्यापणंतथा ॥ योग्याव्यस्ताःसमस्तावाह्यपराधवशादिमे॥
॥ २१ ॥ ज्ञात्वापराधंदेशंचकालंवलमथापिवा ॥ वयःकर्मचवित्तंचदडंदंड्येपुपातयेत् ॥ २२ ॥
चत्वारोवेदधर्मज्ञाःपर्षत्त्रैविद्यमेववा ॥ साब्रूतेयंसधर्मःस्यादेकोवाध्यात्मवित्तमः ॥ २३ ॥ एके
नापिसुवृक्षेणविदुपान्नृकुलंवनम् ॥ उपकारंकरोत्येवनचमूर्खैःकुपादपैः॥२४॥ वरंपर्वतदुर्गेषुभ्रां
तंवनचरैःसह ॥ नोमूर्खजनसंपर्कःसुरेंद्रभवनेष्वपि ॥ २५ ॥ दंभंब्रूतेव्रतरुचौशूरेनिर्घृणतांतथा
॥ प्रियालापिनिदैन्यंचरुजौविमतितांपराम् ॥ २६ ॥ धूर्ततावक्तरिप्राज्ञेदौष्ट्यंगुणिषुसर्वदा ॥
हीनत्वंमन्यतेमूर्खोम्श्गांस्तौतिस्वकर्मच ॥ २७ ॥ मुनेरपिवनस्थस्यस्वानिकर्माणिकुर्वतः ॥
जायतेस्यत्रयःपक्षामित्रोदासीनशत्रवः ॥ २८ ॥ गुर्वीभवतिचारंभेक्षपिणीचक्रमेणतु ॥ दिन
छायेवमैत्रीचखलानांनतथासताम् ॥ २९ ॥ एकस्यमानवाःसर्वेकरिष्यंतिस्तुतिंयथा ॥ ईश्व
रोपितथाकर्मकर्तुंनक्षमस्तेपुनः ॥ १३० ॥ विपरीतंयदादैवंजायतेसुधियामपि ॥ भवंतिनिष्फ

लाःसर्वाःशुचीनांसत्क्रियास्तदा ॥ ३१ ॥ पतितोपिकराघातैरुत्पतत्येवकंदुकः ॥ प्रायेणसाधुवृ
त्तानांनस्थायिन्योविपत्तयः ॥ ३२ ॥ मालतीकुसुमस्येवद्वेगतीहमहात्मनः ॥ मूर्ध्निवासर्वे
लोकस्यशीर्यतेवनएववा ॥ ३३ ॥ कीटोपिसुमनःसंगादारोहतिसतांशिरः ॥ अश्मापियातिदे
वत्वंमहद्भिःसुप्रतिष्ठितः ॥ ३४ ॥ आवासःक्रियतांगांगेपापहारिणिवारिणि ॥ स्तनमध्येतरु
ण्यावामनोहारिणिहारिणि ॥ ३५ ॥ नामृतंनाविषंकिंचिदेकामुक्त्वानितंबिनीं ॥ सैवामृतल
ताराक्ताविरक्ताविषवल्लरी ॥ ३६ ॥ गुरुरात्मवतांशास्ताराजाशास्तादुरात्मनाम् ॥ अथप्रच्छन्न
पापानांशास्तावैवस्वतोयमः ॥ ३७ ॥ पंचभूतानितिष्ठंतिसाक्षिणः सर्वकर्मणाम् ॥ तस्मात्पा
पंनकर्तव्यमनागपिचदुःखदम् ॥ ३८ ॥ स्तुवंतुलोकानिंदंतुलक्ष्मीस्तिष्ठतुवानवा ॥ अद्यै
वभूयान्मरणंधीरोधर्मंनतुत्यजेत् ॥ ३९ ॥ धर्मात्संजायतेभीष्टंवेदोक्तात्श्रेयउत्तमम् ॥ अतःका
शींसमाश्रित्यपुण्यदांधर्ममाचरेत् ॥ १४० ॥ वरंकाशीपुरीवासोमासोपवसनादिभिः ॥ नान्य

त्रदुःखदंराज्यंसमृद्धंनरकोद्भवम् ॥ ४१ ॥ मूढंविनाहिकाश्यांवैवासःकस्यनरोचते ॥ देवोदेवीस
तांसंगोगंगाभुक्तिःपरागतिः ॥ ४२ ॥ काश्यांवासःसतांसंगोगंगांभःशिवपूजनम् ॥ असारेखलु
संसारेसारमेतच्चतुष्टयम् ॥ ४३ ॥ स्नातव्यंजाह्नवीतोयेद्रष्टव्यःकमलापतिः ॥ भोक्तव्यंतस्य
नैवेद्यंवस्तव्यंकाशिकापुरे ॥४४॥ इत्येवंचिंतयन्नित्यंत्यक्त्वादुर्जनसंगतिम्॥धर्मार्थकाममोक्षेषु
सर्वत्रकुशलीभवेत् ॥ ४५ ॥ अज्ञानतमसांधानांभ्रांतानामल्पचेतसाम् ॥ नीतिशास्त्रप्रदीपोयं
धार्यःसन्मार्गबोधकः ॥ ४६ ॥ ॥ इतिश्रीमन्महाडकरोपनामकभगवत्किंकरगंगाधरविरचि
तेप्रपंचसारविवेकेनीतिमार्गनिरूपणंनामतृतीयोल्लासः समाप्तः ॥ ३ ॥ ॥ ७ ॥
॥अथवक्ष्यामिसर्वेपांपापिनांघोरयातनाः ॥ यासांहिश्रवणादेवपापबुद्धिर्नजायते ॥ १ ॥ तत
वालुकनामाख्योनिरयः पड्विधःस्मृतः ॥ तथैवचांधतामिस्रःक्रकचोह्यर्गलाभिधः ॥ २ ॥
कूटशाल्मलिनामाचरक्तपूयस्तथैवच ॥ कुंभीपाकश्चसप्तैतेनरकाघोरदर्शनाः ॥ ३ ॥ क्रंदंतेपा

पिनोयत्रदुःखिताश्चस्वकर्मभिः ॥ स्वमांसभोजनंनित्यंवन्हिज्वालाप्रवेशनम् ॥ ४ ॥ शिलावृ
ष्टिः शस्त्रवृष्टिःपेषणंकंडनंतथा ॥ क्षारोदमूत्रपानंचतप्तायःपिंडभक्षणम् ॥ ५ ॥ पुरीषलेपनंनि
त्यंपुरीषस्यचभोजनम् ॥ अंगारशयनंचैवतथापाषाणधारणम् ॥ ६ ॥ बहुभिःकाष्ठयंत्रैश्चकर्ष
णंछेदनंतथा ॥ गजदंतप्रहरणंनानासर्पैर्विदंशनम् ॥ ७ ॥ वृश्चिकैर्मूषकैश्चैवक्रकचैःपीडनंमहत्
॥ पापिनांचयथापापंजायतेचिरकालतः ॥ ८ ॥ अभक्षभक्षकानिंदापरदाररताश्चये ॥ ताड्य
मानादह्यमानाःक्रंदंतेभैरवान्स्वरान् ॥ ९ ॥ हसद्भिःक्रियतेकर्मरुदद्भिःपरिपच्यते ॥ अवश्यमे
वभोक्तव्यंकृतंकर्मशुभाशुभम् ॥ १० ॥ यद्यदंगेनयत्पापंतत्तदंगस्यपीडनम् ॥ सूचीप्रक्षेपणंचै
वनेत्रयोर्मुखसंधिषु ॥ ११ ॥ धनयौवनमत्तानांपूज्यदाराभिगामिनाम् ॥ वेददेवगुरुप्राज्ञनिंद
कानांतथैवच ॥ १२ ॥ शिश्नेचवृषणेतेषांबहुभारस्यबंधनम् ॥ जिह्वाध्वजस्यविछेदंपानंलाक्षारस ॥१२
स्यच ॥ १३ ॥ नधनंतत्रचायातिसहायार्थंतथापिता ॥ नमाताभ्रातामित्रंचबंधुर्वासुकृतंविना॥

॥ १४ ॥ अनिष्टमिष्टंमिश्रंचत्रिविधंकर्मणःफलं ॥ भवत्यत्यागिनांप्रेत्यनतुसन्यासिनांक्वचित् ॥
॥ १५ ॥ तत्रानिष्टंनारकित्वमिष्टंदेवत्वमेवच ॥ मानवत्वंचमिश्रंहित्रिंधकंविपर्ययेपिणां ॥ १६ ॥
ब्रह्महत्यासुरापानंस्तेयंगुर्वंगनागमः ॥ महांतिपातकान्याहुस्तत्संगश्चापिपंचमं ॥ १७ ॥ गवां
तृष्णाभिभूतानांपानार्थमभिधावतां ॥ ब्राह्मणानांचांतरायःसभवेब्रम्ह्घातकः ॥ १८ ॥ अनर्था
त्यचशास्त्राणिशास्त्रार्थंवक्तियोद्विजान् ॥ समाहूयनदत्तेचब्रह्महासनिगद्यते ॥ १९ ॥ गुरूणा
मध्यधिक्षेपोवेदानिंदासुहृद्वधः ॥ ब्रह्महत्यासमंज्ञेयमधीतस्यचनादरं ॥ २० ॥ निपिद्धभक्षणं
जैह्ममुत्कर्षेचवचोनृतं ॥ रजस्वलामुखास्वादःसुरापानंसमानितु ॥ २१ ॥ अश्वरत्नसुगंधादि
स्त्रीधेनुहरणंतथा ॥ ताम्रायस्त्रपुकांस्यानांस्वर्णस्तेयसमन्वितं ॥ २२ ॥ सखिभार्याकुमारीपुस्व
योनिष्वंत्यजासुच ॥ स्वगोत्रासुसुतस्त्रीपुगुरुतल्पसमंस्मृतम् ॥२३॥ पितृमातृसुतत्यागस्तडा
गारामविक्रयः ॥ हीनदक्षिणयाजित्वंक्रतुविक्रयणंतथा ॥ २४ ॥ स्वाध्यायाग्निसुतत्यागोबांध